ध्यात्म गन्धोऽधिभूतं वायुरधिदैवतं स्यात्। पाञ्चभौतिकमेतच्चातुष्टयमनुवर्णितम्।

अत ऊर्ध्वं त्रिविधमिन्द्रियविधिमनुवर्णयिष्यामः। पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतं स्यात्। हस्तावध्यात्मं [165] कर्तव्यमधिभूतं इन्द्रोऽधिदैवतं स्यात्। पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतं स्यात्। उपस्थमध्यात्ममानन्दोऽधिभूतं प्रजापतिरधिदैवतं स्यात्। वागध्यात्मं वक्तव्यमधिभूतं अग्निरधिदैवतं स्यात्। मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतं स्यात्। अहंकारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽ- [170] धिदैवतं स्यात्। बुद्धिरध्यात्मं व्यवसायोऽधिभूतं ब्रह्माधिदैवतं स्यात्। एवमव्यक्तो भगवानसकृदसकृत्सर्गान्कुरुते संहरते च। कस्मात्क्रीडार्थम्। यथादित्योंऽशुजालं क्षिपति संहरते च यथा चान्तरिक्षादभ्रकोश उत्तिष्ठति।

स्तनितं गर्जितोन्मिश्रं तच्च तत्रैव प्रणश्यत्। [175]

एवमव्यक्तो गुणान्सृजति संहरते च। यथा चार्णवादूर्मिजालं नीचोच्चं प्रादुर्भवति तच्च तत्रैव प्रणश्यदेवमव्यक्तो लोकान्सृजति संहरते च। यथा च कूर्मोऽङ्गानि कामात्प्रसारयते पुनश्च प्रवेशयत्येवमव्यक्तो लोकान्प्रसारयति गिरति च। चेतनश्च भगवान्पञ्चविंशकः शुचिः। तेनाधिष्ठिता प्रकृतिश्चेतयति। नित्यं [180] संहधर्मा च भगवतोऽव्यक्तस्य क्रियावतोऽक्रियावान्भगवान्परमप्रकृतिरणुः क्षेत्रज्ञः क्षेम्य इति।

Colophon

नारद उवाच।

यद्यचेतना प्रकृतिश्चेतनाधिष्ठिता चेतयति कस्माच्च मोक्षोऽस्ति। भवद्विधानां चेतस्काङ्क्षिणां चेतो हि पञ्चविंशकमुपदिशन्ति योगाः साङ्ख्याश्च। तद्यायुक्तमुपदिशन्ति। तद्वचनाच्चा- [185] युतप्रकृतिसहधर्मा प्रकृतिं वर्तमानामनुवर्तते इति। अनुवर्तमानाच्च मन्यामहे अधिष्ठातृत्वादणुत्वाच्चेत इति। अतश्च भवत्येव दोष इति। यथा हि कश्चिद्दीर्घमध्वानं गच्छति सङ्गवान्। असङ्गस्यागमवतो गमने न प्रयोजनं भवति। अथ गच्छति सोऽपि सङ्गी भवति। मत्स्यश्चोदकं सहधर्मिणावेव। एवं भगवद्वच- [190] नात्प्रकृतिपुरुषौ। यद्युदकं प्रवर्तमानं मत्स्योऽनुप्रवर्तते ननु सङ्गवान्भवति असङ्गी मत्स्यस्तस्य किं सङ्गभूयानुवर्तनेन।

सनत्कुमार उवाच।

देवर्षे तत्रासङ्गं वर्णयन्ति पुरुषस्य। न भगवता व्यक्तेन सङ्गोऽस्ति निर्गुणस्य गुणिना। तत्र श्लोकानुदाहरन्ति बुधाः। तानुपधारयस्वैकार्थं पर्यायवचनं कृत्वा। [195]

> अधिष्ठा पुरुषो नित्यं प्रकृत्या न च आत्मनः।
> तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
> चेतना पुरुषो नित्यं कालस्य न च आत्मनः।
> तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
> द्रष्टा हि पुरुषो नित्यं मनसो न च आत्मनः। [200]
> तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
> योद्धा हि पुरुषो नित्यं चेतस्य न च आत्मनः।
> तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
> ज्ञाता हि पुरुषो नित्यं क्षेत्रस्य न च आत्मनः।
> तस्याभिमानो भवति तस्मादासङ्ग उच्यते। [205]
> कर्ता हि पुरुषो नित्यं परस्य न च आत्मनः।
> तस्याभिमानो भवति तस्मादासङ्ग उच्यते।

देवर्षे तत्रासङ्गमनुवर्णयन्ति पुरुषस्य। शुचिर्हि भगवान्क्षेत्रज्ञोऽशुचिनीं प्रकृतिमुदाहरन्ति। सङ्गी हि सङ्गवान्सङ्गी चासङ्ग इति योऽसङ्गो ह्यात्मानं सङ्गिनमनुपश्यति स [210] खल्वज्ञानीत्युच्यते बुधैरिह।

एतस्याविद्याग्रस्तस्य उद्भवाक्षेपशतसहस्रकोटिशोऽप्ययमानस्याव्यक्तसागरे सुमहान्दुःखयोगो भवति। यथा च समुद्रं प्रयातस्य कृतप्रायश्चित्तस्य अर्थतर्पिणो वणिक्संघस्य यानपात्रार्णवोदरगतश्चण्डवायुना भिद्यमानं इतस्ततश्च विमलाभिरू- [215] र्मिभिर्भिद्यमानो हाहाभूतो जनो व्यापद्येत्। शवशश्चाप्राप्तमनोरथा प्लवान्गृहीत्वा। प्लवाश्चोन्मज्जन्ति निमज्जन्ति चान्योन्यमवलम्बमानाः। एवमज्ञानी पुरुष उन्मज्जति निमज्जति च। यथा

---

प्रपोप्ययो हि प्रलयो (for the prior half) —(L 167) G1 विष्णुरधिदैवत (for मित्रोऽधिदैवत) G1 उपस्थोध्यात्मम् (for उपस्थमध्या°) —(L 172) G1 असकृत् (for असकृदसकृत्) —G1 om (hapl) from यथा चार्णवादूर्मि (in line 176) up to संहरते च (in line 178). —(L 181) G1 परम प्रकृतिरहित (for परमप्रकृतिरणु) —(L 185) G1 तद्वचनाद्यायुक्त (for तद्वचनाद्यायुत) —(L 186) G1 अनुवर्तनाच्च (for °वर्तमानाच्च) —(L 187) G1 एष (for एव) —(L 189) G1 गमने (for गमने न) —(L 204) G1 श्रोता (for ज्ञाता) —(L 208) G1 वर्णयन्ति (for अनुवर्णयन्ति) —(L 209) G1 असंगी (for सङ्गी) —(L 211) G1 om. बुधैरिह —(L 212) G1 om. सहस्र G1 [ऽ]प्येभमानस्य (for ऽप्यय°). —(L 214) G1 हुत- (for कृत) G1 यानपात्रैर्णवादागतचण्डवायुना (for °पात्रार्णवोदरगतश्चण्डवायुना) —Colophon *Adhy. name:* M5 सनत्कुमारगीता.

तत्रोन्मज्जंश्च निमज्जंश्च कश्चित्पारमासादयति स मुक्तस्तवस्तस्या- पदो मृत्युमुखात्। [ 220 ]

Colophon

नारद उवाच।

भगवन्नच्छेद्यामेध्यादाह्यातर्क्यानन्त्याकल्प्यानादिमध्या यदा प्रकृतिस्तद्वत्पुरुषोऽप्येभिरेव गुणैर्युत । तत्कथमनित्या प्रकृति- मुदाहरन्ति नित्य पुरुषमिति।

सनत्कुमार उवाच।

देवर्षे सम्यगभिहित भवता। अच्छेद्यासेध्यादाह्यातर्क्यानन्त्या- कल्प्यानादिमध्या प्रकृतिर्हि पुरुषश्च। कर्तृत्वाद्गुणाना- [ 225 ] मनित्या प्रकृतिमुदाहरन्ति अकर्तृत्वान्नित्य पुरुष । यदि प्रकृति- र्गुणान्कुर्याद्विद चात्मान पुरुषश्च। नित्यानित्यभावे वीतरागत्वे चास्य निर्द्वंद्वता च। यदा त्वयमेव स्याद्यान्यदस्ति मम परमित्य- भिमन्यमानो नित्यत्ववतामेति। तत्र श्लोकावुदाहरन्ति।

उभावमूर्तौ ह्यजरावुभावेव महात्मनि । [ 230 ]
विदितौ विषयी चैव विषयश्च महामुने।
पुरुषो विषयी नित्य प्रकृतिर्विषय स्मृत ।
व्याख्यातौ शास्त्रविद्भिर्हि मशकोदुम्बरौ यथा।
प्रकृतिर्न विजानाति भुज्यमानमचेतनम्।
पुरुषश्चापि जानाति भुङ्क्ते यश्च न भुज्यते। [ 235 ]
महदादयो गुणा भोज्य भोक्ता तु प्रकृतिर्द्विज।
मन्यन्त्येव विभागज्ञा भोक्तार तस्य चेश्वरम्।
ऐश्वर्य भवतीशत्वात्प्रकृत्या द्विजसत्तम।
अनीशत्वादनैश्वर्यं पुरुषस्यानुचक्षते।
विभूतित्वाद्विभुत्व हि पुरुषस्य महामुने। [ 240 ]
द्वद्वभावादनित्य हि त्रिगुणा प्रकृतिस्तथा।
निर्द्वंद्वो निर्गुणो नित्य पुरुषोऽत्रानुचक्षते।
क्रियाकरणयोगित्वादनित्या प्रकृतिर्द्विज।
क्रियाकरणहीनो हि नित्य पुरुष उच्यते।

एवमनुमन्यन्ते यतय स्तुन्वाना पुरुषम्। सत्त्व [ 245 ] क्षेत्र पर गुह्याक्षयकर चलव्रणकर निशिचर निधिमेति स्मृतिर्धृति- रिति चैतानि प्रकृतिपर्यायनामानि। अथापराणि भूत भव्य भवि- ष्यमिति। सत्त्व रजस्तम इति त्रिगुणमेतत्प्रकृतिरित्यनुपश्यति। अथ तदव्यक्तात्परमव्यय शिव क्षेममय शुचि व्यत्रमिति विमल- ममलमचलमजरमकरमतरमभवमिति। अभवनमनयन- [250] मगमन पृथगिति चैतानि पुरुषपर्यायनामानि। अत्र पश्यन्तु भवन्त क्षेत्रज्ञ विमोक्ष विशोक विमोहम्। विदम्भाद्विलोमाद्वि- काराद्विरुद्धादानृशस्यादलौल्यमशरणमभयमनवयव पश्यन्ते। तद्यथा मशकोदुम्बरयोर्विवाससहवासोऽन्य एव स्वभाव एवमेव ज्ञानाज्ञानयोर्विवासहवास। अन्यदेव ज्ञानमज्ञानम्। [ 255 ] क्षेत्रज्ञस्त्यक्ष्यति प्रकृतिं न च प्रकृति क्षेत्रज्ञ त्यक्ष्यति। मन्यते प्रकृतिं क्षेत्रज्ञो न च प्रकृति क्षेत्रज्ञ मन्यते। बुध्यते प्रकृति क्षेत्रज्ञो न च प्रकृति क्षेत्रज्ञ बुध्यते। पश्यति प्रकृतिं क्षेत्रज्ञो न च प्रकृति क्षेत्रज्ञ पश्यति। एतद्विवासहवासमित्येतज्ज्ञाना- त्स्वदर्शन पश्यन्ति देवर्षे। ज्ञातार तदसङ्गमनुपश्यतु [ 260 ] भवान्पुरुषे। अत्र श्लोकमुदाहरन्ति।

योगाश्च साख्याश्च वदन्ति सम्य-
ङ्न पञ्चविंशात्परमस्ति किंचित्।
अथान्यथा पश्यति तत्त्वमेत-
द्वय तु पश्याम गुरोर्नियोगात्। [ 265 ]

इत्येतद्योगदर्शनम्। अत्र सांख्यैर्गीतम्। श्लोको भवति।

पश्य पश्यति पश्यन्तमपश्यन्त च पश्यति।
अपश्यस्तावपश्यत्वात्पश्यापश्यौ न पश्यति।

प्रकृति क्षेत्र क्षेत्रज्ञश्चापर । क्षेत्रज्ञ षड्विंशकोऽनुपश्यति।

—(L 225) G1 om. हि G1 [अ]गुणानान् (for गुणा°) —(L 227) G1 पुरुष (for पश्च) G1 नित्यानित्यमाव- (for नित्यमावे) —(L 228) G1 चास्य (for च) G1 एव (for एव) G1 om मम —(L. 229) G1 नित्यत्वम् (for °त्वताम्) —(L 245) G1 om यतय स्तुन्वाना पुरुषम् —(L 246) G1 शुभाकारक (for गुह्या- क्षयकर) G1 चल पूर्णकर (for चलव्रणकर) G1 निशाकर (for निशिचर) G1 निधि निधिस्मृतिर्मतिरिति (for निधिमति स्मृतिधृतिरिति) —(L 247) G1 अभूतमभव्यमिति (for भविष्यमिति) —(L. 248) G1 प्रकृतिम् (for तिर्) —(L 249) G1 पुरुषम् (for परम्) —(L 250) G1 अमरम् (for अकरमतरम्) G1 अभवम् (for अभवनम्) —(L. 252) G1 विलोम (for विलोमाद्) —(L 253) G1 अलोल्यम् (for अलौ°) G1 पश्यति (for पश्यन्ते) —(L 254) G1 एतद् (for तद्) G1 सहवासम् (for °वासो) —(L 255) M6 विवाद (for विवास) G1 प्रकृतिज्ञान (for अज्ञानम्) —(L 256) G1 नवप्रकृति (for न च प्रकृति) After त्यक्ष्यति, G1 ins मन्यते प्रकृतिं क्षेत्रज्ञ त्यक्ष्यति —(L 258) G1 प्रकृतिं क्षेत्रज्ञ° (for प्रकृति° क्षेत्रज्ञं) —(L 260) G1 देवर्षा (for देवर्षे) G1 तदग पश्यतु भवा- न्पुरुष (for ज्ञातार तदसङ्गमनुपश्यतु भवान्पुरुषे) —(L. 264) G1 एन (for एतद्) —Lines 267-268 = 29B 280-81 —(L 268) G1 पश्यत (for °ति) —(L 269) G1 क्षेत्रज्ञ क्षेत्रज्ञ (for क्षेत्र क्षेत्रज्ञश्च) —(L 271) G1 देवर्षेयमय

न तत्पञ्चविंश क्षेत्रज्ञ प्रकृतिर्वा पर क्षेत्रज्ञ पश्यति। [ 270 ] देवर्षे यन्मया बहुभिर्जन्मभिरवाप्तमिदानीम्। ये क्षेव पश्यन्ति शिव हि तेषामिहैच चामुत्र सशयो नास्ति। सुत्र पर जन्म चाह ब्रवीमि। न त्वितर मृत्यु विवेदाहम्।

प्रतिविरम स बुद्धिविग्रहात्परमशुचिस्त्वमुपास निर्मम।
बहुभिररिभिरेतदावृत प्रकृतिमय हि शरीरमध्रुवम्। [275 ]
यदि जयसि शरीरमेकतो ननु विजितास्त्व सर्वशत्रव।
मुनिभिर्ऋषिभिरीरित पर परमशुचिं तमुपास्य ते गता।

एतन्मयोपसन्नेषूपदिष्ट देवर्षे हिरण्यनाभस्य महासुरस्य शिवस्य चैवब्रमुचेर्नारदस्य प्रह्लादस्य वृत्रस्य विरोचनस्य बलेर्मरीचे पुलस्त्यपुलहयो। तथैव भृग्वङ्गिरसोरत्रि- [ 280 ] वसिष्ठकाश्यपानां शुक्रस्य चेन्द्रस्य बृहस्पतेश्चाङ्गिरसोत्तमाय। तथैव विश्वावसवे मयोक्त गन्धर्वाप्सरोभिश्च। एतद्ब्रह्म सर्वत्र सम द्रष्टव्यम्। ब्राह्मणि चेन्द्रे शुनि कीटे पतगदशमशकेषु सम्य-गनुदर्शनाच्च पश्याम। सर्वस्य मोक्षधर्मो विद्यते। एतत्पद-मनुद्विग्न जन्ममृत्युतमोनुदमुपशान्त समुत्तीर्णमवस्थित- [ 285 ] मपज्वरम्।

भीष्म उवाच।

एतच्छ्रुत्वा मुनिश्रेष्ठो नारद स महामुनि।
परया च मुदा युक्त प्रणम्य शिरसा गुरुम्।
प्रदक्षिण च त कृत्वा जगाम भवन स्वकम्।
भगवानपि तत्रैव सद्यस्त्वन्तरधीयत। [ 290 ]

Colophon

## 29 D

G₁ Ms cont

भीष्म उवाच।

सयमन काशिपतिरविमुक्तगत मुनिं पप्रच्छ ज्ञानविज्ञान कपिलादागतागमम्।

संयमन उवाच।

को विश्व सृजते सर्वमिद महरते च क।
कश्च विश्वमधिष्ठाय निष्ठत्यभिनहारपु।
कश्च विश्वमविश्व च नित्यमेवानुपश्यति। [ 5 ]
कौ च तौ मुनिशार्दूल नमस्ये तावुभावपि।
कति तत्त्वानि विश्वात्मा भगवान्हव्यकव्यभुक्।
किं च हव्य च कव्य च पठ्यते शास्त्रदर्शनात्।
कश्च सत्त्वात्समुत्पन्नस्तस्मात्तत्त्वाद्विशारद।
कश्च तत्त्वादिरित्युक्तस्तथा प्राणादिरेव च। [ 10 ]
भूतादिश्च मुनिश्रेष्ठ विकारादिस्तथैव च।
कस्मादादत्ते चैन विसृज्य च पुन पुन।
अध्यात्ममधिभूत च अधिदैव तथैव च।
विमोक्षश्चास्य भगवन्योऽयं देहेषु वर्तते।
सविज्ञान सद्दाक्ष तथोपनिषद मुने। [ 15 ]
वर्तते त्वयि कार्त्स्न्येन योगशास्त्र तथैव च।
पुराण च मुनिश्रेष्ठ यथाबुद्धि सनातनम्।
साङ्गोपाङ्गाश्च चत्वारो वेदास्तिष्ठन्ति वेदवित्।
सर्वस्य चास्य ज्ञानस्य ग्रन्थतश्चार्थतश्च ते।
विदित वेदितव्य हि पाणावामलक यथा। [ 20 ]
परावरज्ञो भगवानित्येवमनुशुश्रुम।
तेन त्वामनुपृच्छामि सर्वभूतहिते रतम्।
परोक्षमेतदस्माक तव प्रत्यक्षमेव च।
मन्याम मनसा देव यतीना यतिसत्तम।
तदनुग्रहधर्मेण अक्षयेणाव्ययेन च। [ 25 ]
शाश्वतेनाप्रमेयेन अचलेनामृतेन च।
जन्ममृत्युविमुक्तेन योक्तुमर्हसि मानघ।
सर्वथा तेन देहेन असङ्गन्येन मे मुने।
वध्यामि भगवन्नित्यमित्यर्थमहमागत।
काशिराज्यं परित्यज्य भगवन्तमरिंदम। [ 30 ]
तदेतच्छ्रोतुमिच्छामि याथातथ्येन तत्त्वत।

---

(sic) (for देवर्षे यन्मया) G₁ आत्मभिर् (for जन्मभिर्) —(L 274) G₁ विरमस्व (for °म स) G₁ उपासन् (for उपास) —(L 277) G₁ निर्मित (for ईरित) G₁ शुचिम् (for -शुचिं तम्) —(L 279) G₁ om प्रह्लादस्य —(L 283) G₁ पतगे (for पतग) —(L 287) G₁ द्विज (for मुनि) —(L 288) G₁ मुदया (for च मुदा). —(L 289) G₁ कृत्वाथ (for त कृत्वा). —Colophon. *Adhy name* Ms सनत्कुमारगीता समाप्ता।

29 D

—(L. 6) G₁ नमस्य (for °स्ये) —(L 9) G₁ (also as above) तत्त्वात् (for सत्त्वात्) —(L. 11) G₁ विकारादिस् (for मुनिश्रेष्ठ) G₁ तथैव च दयानिधे (for the post half). —(L 12) G₁ पुन: सृजति वै कथ (for the post half) —(L 14) G₁ विमोक्ष (for °क्षश्च) G₁ भगवान् (for °वन्). —(L 15) G₁ सर्वज्ञान (for सवि°) —(L 17) G₁ यथा बुद्धि° (for यथाबुद्धि) —(L 22) G₁ त्वा परि (for त्वामनु) —(L 28) Ms सकृदन्येन (for असङ्गन्येन). —(L 29) G₁ ध्यायामि

ममानतस्य भगवन्शिष्यस्यामितबुद्धिमान् ।
वक्तुमर्हसि शान्त्यर्थमेतमर्थं महामुने ।
ममोद्वहत्येव मन तत्त्व श्रोतु परायणम् ।
पापघ्नममृत श्रेष्ठ पवित्राणा परायणम् । [ 35 ]
पञ्चशिख उवाच ।
श्रूयता नृपशार्दूल सर्वमेतदसशयम् ।
सर्वस्य चास्य ज्ञानस्य कृत्स्नकारी भवानपि ।
विशनाद्विश्वमित्याहुर्लोकाना काशिसत्तम ।
लोकाश्च विश्वमेवेति प्रवदन्ति नराधिप ।
लोकानामप्यविशनादविश्वमिति त विदु । [ 40 ]
ईदृग्भूतीयमेवाहुरपर शास्त्रदर्शनात् ।
विश्वाविश्वे नरश्रेष्ठ तत्त्वबुद्धिपरायणा ।
नराणा नरशार्दूल तत्त्वमेतदसशयम् ।
अमृताश्च त्रयोऽप्येते नित्याश्चेति वदन्ति वै ।
विभागिनश्च वै नित्य विमलाश्चेति न श्रुति । [ 45 ]
अजाश्चामूर्तयश्चैव अप्रकम्प्याव्ययाश्च ह ।
अग्राह्याश्चाप्रतर्क्याश्च तथामर्त्याश्च पार्थिव ।
अनादिनिधनाश्चैव तथामूर्त्याश्च तेऽनघ ।
अच्छेद्याश्चामराश्चैव अप्रदह्यतमाश्च वै ।
निर्गुणाश्चेतनाश्चैव पश्याश्चेति नराधिप । [ 50 ]
यथैतदुक्तमाचार्यैरेवमेतदसशयम् ।
सन्ति सर्वे गुणा ह्येषा त्रयाणा नृपसत्तम ।
अह तत्त्व प्रवक्ष्यामि यथा चाचार्यदर्शनम् ।
एकोऽत्र गुणवांश्चैव तथैवाचेतनश्च ह ।
अपश्यश्च महाराज प्रधान इति पठ्यते । [ 55 ]
प्रत्यय चोपसर्गो वै विधान मन इष्यते ।
प्रधान इति नामास्य एतयोर्धर्म उच्यते ।
सधावर्तीति राजेन्द्र इत्येवमनुशुश्रुम ।
तस्य तत्सप्रवक्ष्यामि नव ताश्च निबोध मे ।
प्राकृतान्यस्य चत्वारि वैकृतानि तु पञ्च वै । [ 60 ]
पूर्वमुत्पद्यतेऽव्यक्ताद्व्यक्तो व्यक्तादिरुच्यते ।
प्राणानामादिमेवैतमाहुरध्यात्मचिन्तका ।
महानिति च नामास्य प्राहुर्वेदविपश्चित ।
बुद्धिरित्यपरे राजन्विरिञ्चेति तथापरे ।
एतस्मात्खलु वैरिञ्चमुत्पद्यति नराधिप । [ 65 ]
विरिञ्चाद्राजशार्दूल वैरिञ्च सर्ग उच्यते ।
एकैकशो विरिञ्चो वै वैरिञ्चादुत्पत्तित स्मृत ।
एते सर्गा महाराज विधाविधेति न श्रुति ।
वैरिञ्चात्पञ्च भूतानि वैरिञ्चानि नराधिप ।
उत्पद्यन्ते महाराज अहकारादसशयम् । [ 70 ]
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
पञ्च भूतविशेषाश्च युगपत्काशिनन्दन ।
वैरिञ्चो विषयार्थी तु जज्ञे भूतेषु पञ्चसु ।
मन इत्यभिदिश्येत विखराद्वैखरस्तथा ।
बुद्धीन्द्रियाणि राजेन्द्र तथा कर्मेन्द्रियाण्यपि । [ 75 ]
चतुर प्राकृतान्सर्गान्युगपत्तात बुद्धिमान् ।
वैकृतान्पञ्च चैवाहुरध्यात्मकृतनिश्चया ।
त्व चैवान्ये च राजेन्द्र तत्त्वबुद्धिविशारदा ।
तिर्यक्सर्गं तथा मुख्य ऊर्ध्वोऽर्वाक्स्रोत एव च ।
पञ्चमोऽनुग्रहश्चैव नवैतान्विद्धि पार्थिव । [ 80 ]
एतद्धि सर्गनवक साख्ययोगनिदर्शनम् ।
मयेयमानुपूर्व्येण तत्त्वसख्या च तेऽनघ ।
यश्च यस्मात्समुत्पन्नस्तत्तश्चैवानुवर्णित ।
विकारादि मन प्राहुस्त्रयाणा पञ्चकानि वै ।
भूतादीनां तु पञ्चानामाहुर्वैखरमेव तु । [ 85 ]
प्राणापानसमानानामुदानव्यानयोश्च ह ।
विरिञ्चमाहु प्राणादि ब्राह्मणास्तत्त्वदर्शिन ।
त्रयोविंशतितत्त्वाना व्यक्ताना नृपसत्तम ।
आदिमव्यक्तमित्याहुर्यथाश्रुतिनिदर्शनम् ।
इति । [ 90 ]

Colophon

पञ्चशिख उवाच ।
एतद्धि मूर्तिमधात त्रैलोक्ये सर्वदेहिषु ।

(for प्रवक्ष्यामि) —(L 31) G1 यथातत्त्वेन (for याथातथ्येन) —(L 33) G1 एतदर्थं (for °मर्थं) —(L 34) G1 transp तत्त्व and श्रोतु —(L. 35) G1 पवित्राग (for °त्राणां) —(L 39) G1 लोकाश्च (for लोकांश्च) —(L 46) G1 अजा अमूर्तयश्च (for अजाश्चा°) —(L 51) G1 यदेतद् (for यथैतद्) —(L 53) G1 वाचार्यं (for चाचार्य-) —(L 54) G1 हि (for ह) —(L 55) G1 महाभाग (for °राज) —(L 56) G1 प्रधान (for वि°) —(L 59) G1 सर्वं (for तत्स-) —(L 66) G1 स वै सर्गं इहोच्यते (for the post half) —(L 68) G1 श्रुत (for श्रुति) —(L 73) G1 वैरिंचोपि विषयार्थी (for the prior half) —(L 74) G1 वैखर (for °रस्) —(L 76) G1 बुद्धिमन् (for °मान्) —(L 78) G1 एव (for चैव) — Colophon *Adhy name* M5 सयमनपृच्छ

आव्यक्तिकस्य सादृश्यं विरिञ्चस्य प्रजापतेः ।
व्यक्तस्याव्यक्तमित्याहुर्विश्वरूपस्य न श्रुतिः ।
वेदितव्यो महाराज विश्वरूपः सनातनः ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च । [95]
प्रवक्ष्यामि यथातत्त्वं तन्निबोध जनेश्वर ।

श्रोत्रमध्यात्मं शब्दोऽधिभूतमाकाशमधिदैवतम् । त्वगध्यात्मं स्पर्शोऽधिभूतं वायुरधिदैवतम् । वागध्यात्मं वक्तव्यमधिभूतमग्निरधिदैवतम् । घ्राणमध्यात्मं गन्धोऽधिभूतं पृथिव्यधिदैवतम् । पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतम् । हस्ता [100] वध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतम् । पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतम् । उपस्थोऽध्यात्ममानन्दोऽधिभूतं प्रजापतिरधिदैवतम् । मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतम् । अहंकारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽधिदैवतम् । बुद्धिरध्यात्मं बोद्धव्यमधिभूतं पुरुषोऽधिदैवतम् । [105] एतदध्यात्ममधिभूतमधिदैवतं च सर्वं विज्ञातव्यम् ।

अनभिद्रोहेण ब्राह्मणेन्द्रे शुनि कीटे पतंगपुत्तिकादंशमशकेष्वित्येवं प्रयोक्तव्यं स्यात् ।

आत्मन्येवात्मलिङ्गे चैतस्याव्यक्तिकस्य महात्मिकस्याहंकारिकभौतिकवैकारिकेभ्यश्च कालज्ञानं पुरुषेभ्यो व्याख्या- [110] स्यामः । तदेतत्पर्यायशतसहस्रशः पञ्चाशत् पञ्चाहोरात्रमपदिश्यते पञ्चानां पुरुषाणाम् । तत्रैकस्य प्रतिपिद्धमव्यक्तस्य चतुर्णां वक्ष्यन्त्याचार्याः । महदादीनां पर्यायशतसहस्राण्यशीतिमहोरात्रमपदिश्यते । प्राधानिकस्य महतश्चत्वारिंशत्पर्यायशतसहस्राण्यहोरात्रमपदिश्यते । [115]

आहंकारिकस्य भौतिकस्य पुरुषस्य पर्यायदशसहस्राण्यहोरात्रमपदिश्यते । वैकारिकस्य पुरुषस्य मनसः पर्यायमपि चतुर्युगम् । तदेतत्पर्यायशतसहस्राणि पञ्चाशतमव्यक्तस्याहोरात्रस्याकेवलस्य । एष्य पश्येन्नित्यं कालज्ञानम् । कालज्ञानेऽस्याव्यक्तस्याचेतनस्य ज्ञानविज्ञानमिति पश्यन्त्या बीजधर्मिण [120] बीजधर्मिणामप्रसवधर्मिणामप्रकृतिधर्मिणामप्रलयधर्मिणां प्रलयधर्मिणामिति ।

Colophon

सयमन उवाच ।

भगवन्यदा खल्वमिदं क्षेत्रशतसहस्रकोटिष्ववतिष्ठमानस्तत्स्थत्वाश्रित्य सहधर्मा स्यादेव खल्वयं क्षेत्रसहस्रकोटिष्ववतिष्ठमानस्तत्स्थत्वाश्रित्य सहधर्मं स्यात् । यदि खल्वस्यानिष्ट [125] क्षेत्रं सहधर्मित्वं स्याद्यायमिष्टानिष्टे प्रवर्तमानः प्रकृतिमनुवर्तेत गुणसर्गाय गुणसर्गम् । यच्चानुवर्तमानस्य प्रकृतिसहधर्मित्वं स्याद्भवतु । न ह्यनिष्टगुणेनानुगम्यमानामभिव्यजत इत्यर्थमस्येष्टा प्रकृतिर्गुणाश्चताननुवर्तते च । तदभिव्यजनादनुगमनाच्च तत्स्थत्वाच्च नित्यस्यानित्यमनुपश्याम । तद्धेतुमात्रं [130] वक्ष्याम । कश्चिद्गुण्यगुणिना सार्धं समीयाय । समेत्य च कार्यकारणं स कुर्वीत । तं च तथेष्टानिष्टे प्रवर्तमानं गुणिनमथागुणोऽनुवर्तेत तत्स्थत्वात् । ननु सोऽपीष्टानिष्टवद्भवति तत्स्थत्वात् ।

यदि ह्ययमिष्टानिष्टव्यतिरिक्तः सद्भावो नायमिष्टानिष्टवत्त्वमित्यर्थमस्येष्टानिष्टत्वभावमिष्टं येनायमनुवर्तते चाभिव्य- [135] जते चेति । तदनुव्यजनादनुगमनाच्च कार्याकार्यकर्तृत्वमस्यानुपश्याम । कार्याकार्यकर्तृत्वाच्चायमिष्टानिष्टवान्भवति ।

यदुक्तमिष्टानिष्टे नायमिति तन्मिथ्या । गुणवानयं क्षेत्रज्ञो नागुणवान् । यद्ययमगुणवान्स्याद्यायमिष्टानिष्टे प्रवर्तमानां प्रकृति-

---

(L 92) G₁ अव्यक्तिकस्य (for आ°) — (L. 93) G₁ एव (for इति) — (L. 97) G₁ आकाशो (for °शम्) — G₁ om (hapl) from उपस्थो (in line 102) up to धिदैवतम् (in line 103) — (L. 106) G₁ इति (for च) — (L 107) G₁ जनाभि (for अनभि) G₁ ब्रह्मणींद्रे (for ब्राह्मणेन्द्रे) G₁ पतत्रिकादश (for पुत्तिकादश-) — (L 108) G₁ एव (for एवं) — (L 109) G₁ आत्मनैव (for °न्येव) G₁ ममात्मिकाहंकारिक (for महात्मिकस्या°) — (L 111) G₁ उपदिश्यते (for अप°). — (L 112) G₁ तत्रैकस्य (for तत्रैकस्य) After चतुर्णां, G₁ ins वर्णानां — (L 113) G₁ वक्ष्यामि (for वक्ष्यन्ति) G₁ [आ]चार्याशीतिम् (for [अ]शीतिम्) — (L 114) Before प्राधानिकस्य, G₁ ins वैकारिकस्य — (L 115) G₁ अपदिश्यते (for °श्यते) — (L 117) G₁ अपदिश्यते (for °श्यते). G₁ मास (for मनसः). — (L 118) G₁ om (hapl) होरात्र — (L 119) G₁ कालज्ञानस्य (for °ज्ञानेऽस्य) — (L. 120) G₁ बीजधर्मिणा (for °धर्मिण) — (L 121) G₁ प्रकृतिधर्मिणा मकृतिधर्मिणा (for अप्रसवधर्मिणामप्रकृतिधर्मिणाम्). G₁ अप्रलयधार्मिणा (for °धर्मिणां) — Colophon *Adhy name* M₆ सयमनपृच्छा.

(L 124) G₁ सहधर्मी (for °धर्मा) — (L 125) G₁ om यदि खलु G₁ यस्य (for अस्य). — (L 129) G₁ om. च G₁ अनुवर्तनाच्च (for °गमनाच्च) — (L 131) G₁ गुणस्त्वगुणिना (for गुण्यगुणिना). — (L 132) G₁ om. स G₁ गुणो (for [अ]गुणो) — (L 134) G₁ यद्यप्ययम् (for यदि ह्ययम्). G₁ सता ह्यनायायमिष्टत्वभावमिष्ट (for सद्भावो नायमिष्टानिष्टवत्त्वमित्यर्थमस्येष्टानिष्टत्वभावमिष्टं) — (L 137) G₁ इष्टानिष्टवत्स्याद्भवति (for °निष्टवान्भवति) — (L 138)

मनुवर्तेत धर्मिणीम्। तदनुवर्णितानि द्वंद्वस्य द्वद्वधर्मि- [140]
त्वात्पश्याम । तदनुपपन्न स्याद्यतिरिक्तस्यातिरिक्तत्वमनिर्द्वं-
द्वस्य सद्वंद्वस्य च पश्यस्य । आचार्य पश्य त्व केवलस्याकेव-
लस्य नित्यस्य चानित्यत्व केवलस्याकेवलत्व स्वातन्त्र्य चास्य ।

पञ्चशिख उवाच ।

भो सयमन यदेतदुक्त भवता न वयमस्यैतदेव गृह्णीम । एक-
त्वमेवैतदुपदिष्ट भवता तत्र यदिष्टम्। सयोग निय जानीते [145]
सृज्यमानमसकृत्सहरमाण च । गुणास्तु गुणसहरणमनुव्याख्या-
स्याम । तद्यथा चत्वारो भूतग्रामा जरायुजाण्डजोद्भिदस्वेदजा
कालाग्निनाहकारेणाप्रमेयप्रभावानुभावेन शतसहस्रांशुना दह्य-
माना विघूर्णन्तोऽवशा भूमौ पतन्ति । ततस्तैर्भूर्विहीना भूर्विरसना
शुद्धा स्थण्डिला कूर्मपृष्ठनिभा बभूव । ता तथाभूता [150]
जगज्जननी जगतीमापो भुञ्जते । प्रनष्टा भूर्जलमेव स्यात । जल-
मादित्यो रश्मिभिरादत्ते । समन्तादपा विनाशादग्निर्ज्वाल्यमानोऽ-
न्तरिक्षचरान्भूतानुपयुज्याग्निर्जलमादत्ते । अग्नि च वायु । विन-
ष्टेऽग्नौ वायुर्न्वाग्नि स्यात्। स तदा सर्वप्राणभृता प्राणानुपयुज्य
वायुराकाश स्यात। आकाश मनो मनोऽहकारोऽहकार [155]
महान्सूर्य सूयनात्। कृत्स्नस्य जगत सर्वसूर्याणामेकीकृत्य लोका-
न्क्रीडाशाय स्यान्महतन्नमसो मध्ये तिष्ठत्येकस्तमप्याद्यऽव्यक्तम्।
तदेतत्पञ्चाहोरात्रिक प्रलय महाप्रलय इत्युच्यते। प्रलयान्महतस्त
देकस्य प्रणष्टगर्वस्य सर्वमूर्तिजालेश्वरविनाशयोदक मूर्त्येक स्यात।
तदेतद्धव्य कव्य च प्रकरणाद्गुणता कव्यमित्युच्यते स [160]
हरणाद्धव्यमिति । तदेतद्गुणवन्निर्गुण गुणोपयोगाद्गुणकर्तृत्वाद्गुणी-
त्युच्यते बुधै । क्रीडार्थमेवासृजत्सृजते च गुणान्। अनवबोधात्तद-
परस्त्वहमेवैक स्याद्वान्य स्यादिति। यदि ह्येषावबुध्येतान्योऽस्ति
मम वर इति न सृजेदुदासीनत्वाद्य सर्गसहारयोरुत्पत्तिर्न भवेत्।

यदुक्त भो सयमन को विश्व सृजते कृत्स्नमिद सह- [165]
रते चेति । यदप्युक्त कश्च विश्वमधिष्ठाय तिष्ठत्यभिवहारुप्विति ।
पञ्चविंशकोऽन्योऽन्यस्याव्यक्तस्य त्रयोविंशतितत्त्वस्य चतुर्विंशकस्य
द्रष्टा द्रष्टव्यस्य श्रोता श्रोतव्यस्य मन्ता मन्तव्यस्य बोद्धा बोद्ध-
व्यस्याधिष्ठाता वा । अनेनाधिष्ठिता प्रकृतिर्गुणान्सहरते च नर्तते।
न चेतनेनाचेतना निर्गुणेन गुणिनीति पश्येनापश्येति [170]
शुद्धेनाशुद्धा नित्येनानित्या केवलेनाकेवला सर्गधर्मिण्यसर्गधर्मिणा-
दर्शनधर्मिणा दर्शनधर्मिणी क्षेत्रधर्मिणाक्षेत्रदर्शनात्। कस्मात्।
पृथक्त्वात् । पृथग्भावमस्य प्रपद्यतोऽनेकत्व नेष्ट भवत ।
प्रकृतिक्षेत्रज्ञयोरेकत्वमनवबोधदर्शनमेतदबुधाना दर्शनम् । न
बुधा ह्येवमेतदनुपश्यन्ति पश्यापश्ययोरेकत्वम्। पश्य [175]
पश्यन्त दैवादन्य एव पश्य । कस्मात्। शास्त्रदर्शनात्। शास्त्र-
दर्शनस्य चानवबोधादबुध इत्युच्यते बुधै । बुधश्चाय क्षेत्रज्ञो
बुद्ध्यादीन्गुणानभिवर्तमानाननुबुध्यते प्रकृतित । तच्च बोद्धव्यम्।
न त्वेव प्रकृतिर्गुणान्क्षेत्रज्ञ वा । अनवबोधात् । यदि ह्येव बुध्ये-
रन्प्रकृतिर्वा गुणा वा बुद्ध बुद्धसहधर्मिणी स्यात्। भवे- [180]
युस्ते च । बुद्धोऽनुबुध्यति तमनुबुद्धत्वाच्चप्रकृतिरस्मिन्यते। अहमे-
वास्य नान्य स्यादिति । इष्टान्यभिष्वजतेऽऽत्मजाना यजन-
याजनाध्ययनाध्यापनदानप्रतिग्रह भक्ष्याभक्ष्य पेयापेय वाच्या-
वाच्यमिति । गमन सकोचन प्रसारण प्रियाप्रिय गम्यागम्य
शुभाशुभ शब्दस्पर्शरूपरसगन्धादीना चावाप्तिरित्येव- [185]
मादीन्गुणानुत्पादयत्यनवबोधात् । प्रकृतिरनुभूयते द्वंद्वत्वात्।
तदनेकत्वमस्य क्षेत्रज्ञस्य प्रपद्यते । निर्द्वंद्वस्य चास्य प्रवर्तमानस्य
पश्यत उत्पद्यतेऽहकारकृतो दोष स्यात्। अहमेना प्रत्याचक्षे-

---

G1 तत्स्य (for तत्) —(L 140) G1 गुणधर्मी (for धर्मिणीम्) G1 वर्णितानि (for वर्णितानि) —(L 141) G1 तदुपपन्न (for तदनुपपन्न) G1 व्यतिरिक्तत्वम् (for व्यतिरिक्तस्यातिरिक्तत्वम्) —(L 142) G1 असद्वंद्वत्वाच्च (for सद्वंद्वस्य) G1 का चास्य (for आचार्य) —(L 143) G1 अनित्यत्व (for चानि°). G1 केवलत्व (for केवलस्याकेवलत्व) —(L 145) G1 यदिष्ट (for °ष्टम्) G1 सयोगान् (for सयोग). —(L 146) G1 सज्यमानम् (for सृज्य°) G1 सहारमनुवक्ष्याम (for गुणसहरणमनुव्याख्यास्याम) —(L 147) G1 जरायुजाण्डजोद्भिज्जा (for °द्भिदस्वेदजा) —(L 153) G1 अतरिक्षचरांश्च (for °चरान्) —(L 154) G1 त (for स) —(L 155) G1 तथाहकार (for मनोऽहकारोऽहकार) —(L 156) G1 एकीकृत्वा (for °त्य) —(L 157) G1 om स्यात् —(L 160) G1 हव्यकव्य (for हव्य कव्य) G1 कर्तव्यम् (for कव्यम्) G1 सहरणाद् (for स ह°) —(L 161) G1 त गुणवत (for गुणवत्) G1 गुणिनमुपदिश्यते (for गुणीत्युच्यते) —(L 162) G1 क्रियामेवमेवामकृत् (for क्रीडार्थमेव) G1 मन्त्वनवबोधाद् (for अनव°) G1 अहमस्त्वहम् (for तदपरस्त्वहम्) —(L 166) G1 यदुक्त कश्चिद् (for यदप्युक्त कश्च) —(L 167) G1 चतुर्विंशतिकस्य (for °विंशकस्य) —(L 169) G1 om च —(L 171) G1 सहधर्मिण्य सहधर्मिणा —(L 173) G1 अस्या (for अस्य) G1 प्रपद्यते नैकत्व (for °तोऽनेकत्व) —(L 174) G1 एव तद् (for एतद्) —(L 175-176) G1 om पश्य पश्यन्त दैवादन्य एव पश्य —(L 177) G1 अबोधाद् (for चानवबोधाद्) —(L 178) G1 अवबुध्यते (for अनु°) —(L 179) G1 प्रकृति वा (for °तिर्गुणान्) G1 अनवबोधा अबुधस्य (sic) (for वा । अनवबोधात्) —(L 181) G1 बुद्धामनु (for बुद्धोऽनु-) M5 प्रकृति (for °तिर्) —(L 182) G1 इष्टानिष्टानभिष्वजते सहजा (sic) (for इष्टान्यभिष्वजतेऽऽत्मजाना) —(L 187) G1 om चास्य —(L 188)

द्वमेनां बुध्यामीति । न चैषा पश्यत्याचक्षते मन्यते बुध्यते चाहंकारात् । यदि ह्यभिमन्येद्वाभिष्वजेद्वा । एवमनु- [ 190 ] बुद्ध स्यात् । अनुबन्धाच्च शक्तिरयं स्यात् । शक्तित्वाच्चास्य व्यतिरेकत्व स्यात् । यदि ह्ययमिष्टानिष्टाभ्या मध्यस्थ कथमस्येष्टानिष्टकृतो दोष स्यात् । भवति निर्द्वंद्वत्वाच्चास्यालेपकत्वाच्चास्य व्यतिरेकत्व स्यात् । भवतश्चात्र श्लोकौ यथा ।

पङ्कस्यापि हि दोषेण नोपलिप्यति पङ्कजम् । [ 195 ]
तथाव्यक्तस्य दोषेण नोपलिप्यति केवल ।
केवलस्य पृथग्भावात्पङ्कपङ्कजयोर्यथा ।
तथास्य सहभावत्वाद्विनाभाव इति स्मृत ।

एवमस्य भो सयमन व्यतिरिक्तस्य व्यतिरिक्तत्व भवति । असहभावमसहभावत्वाच्च । अन्यत्वमन्यत्वान्निस्तत्त्व- [ 200 ] मिति । अत्र श्लोका भवन्ति ।

घोरादगाधादव्यक्तादस्तमस्ततर जना ।
प्रतीपभूतमन्यस्या मन्यन्ते तत्त्वबुद्धय ।
ये त्वबुद्धास्तपोयोगादेकत्व नानुपश्यति (sic) ।
ते व्यक्तनिष्ठादेकत्वाज्जायन्ते च म्रियन्ति च । [ 205 ]
निर्द्वंद्वधर्मिणो नित्यमत्यन्त द्वन्द्वधर्मिणा ।
अनित्याच्च महाराज द्वन्द्वनिष्ठा भवन्ति ते ।
अश्रद्दधाना शास्त्रस्य द्वैधीभावाच्च पार्थिव ।
कालस्यास्ये निमज्जन्ति उन्मज्जन्ति भवे नरा ।
अद्वैधात्तु भवेन्मोक्षो ह्यव्यक्तग्राहधर्मिणाम् । [ 210 ]
विमुच्यैतद्विमोक्ष स्यादविमोक्षात्पुनर्भव ।

Colophon

पञ्चशिख उवाच ।

भो. संयमन एवमन्योऽव्यक्तधर्मिणोऽप्यगुणो गुणधर्मिणोऽप्यचलश्चलधर्मिणोऽप्रकृति प्रकृतिधर्मिण क्षेत्रज्ञ. क्षेत्रधर्मिणो विमुक्तश्चाविमुक्ताद्विमलश्चाविमलाच्छुद्धोऽशुद्धाद्योगश्चावियोगान्मोक्षश्चाविमोक्षात् । एव पुष्करपर्णस्थ इवाब्बिन्दु- [ 215 ] र्नित्यमसक्तस्तत्स्थत्वान्मशकोदुम्बरयोर्मत्स्योदकयोश्च यथाव्यक्त भवति सहभावादेवमस्य क्षेत्रज्ञस्यान्यत्व भवति । तदुष्यमाणस्य पश्येनापश्यस्य पश्यतश्चापश्यबुद्धाद्बुद्धस्य चेतनाचेतनस्य केवलात्केवलस्य नित्यानित्यस्य ज्ञानाज्ञानस्य । एवमस्य भो अज्ञातस्याव्यक्तस्योपकरण शोकादशोक, मोहादमोह, [ 220 ] स्थिरास्थिर, अभ्रादनभ्र व्रणादव्रण काजादकाजं सीमादसीम पुरादपुर पुरस्य चाप्यवदारण पुरत्वमुपदिश्यते । लोकादलोक कालादकाल भयादभय शिवादशिव विभुत्वाच्चाविभुत्वम् । एवमस्यानुपश्यत खल्वव्यक्तमविजनमस्यैकत्व परमनुपश्यतो नानात्वात्क्षेम्यादक्षेम्य स्यादक्षेम्यादव्यक्तात् । भवन्ति [225] चात्र श्लोका ।

क्षेम्याक्षेम्य नानुपश्येत नित्य
क्षेम्यस्त्वन्यस्त तु नैवानुपश्येत् ।
षड्विंशो वा पञ्चविंशो नु राज-
न्नव्यक्तश्च प्राहुरेवं विधिज्ञा । [ 230 ]
योऽय बोद्धा पञ्चविंश परस्य
स मन्यते ईदृशोऽस्मीति राजन् ।
बुद्धस्य वै बोधनात्तेन सम्य-
ग्गच्छत्यय न चलो नाचलस्त्वम् ।
एव बोद्धा केवलात्केवल स- [ 235 ]
न्स स्याद्व्यक्त किं च सज्ञानसज्ञ ।

---

Gr पश्यन् (for पश्यत) Gr आचक्षे ते (for प्रत्याचक्षे) —(L 189) Gr चैप (for चैषा) Gr om मन्यते —(L 190) Gr ह्यय मन्येतामिषजेद्वा (for ह्यभिमन्येद्वाभिष्वजेद्वा). Gr अनुबध (for बुद्ध) —(L 193) Gr यदायम् (for यदि ह्ययम्) —(L 194) Gr om स्यात —(L 199) After भवति, Gr ins व्यतिरिक्तत्वात् —(L 202) Gr अस्तम त्वजर (for अस्तमस्ततर) —(L 203) Gr अन्यस्मान् (for °स्या). —(L 204) Gr एकत्वेनानुपश्यत (for the post. half) —(L 205) Gr जायति (for जायन्ते) —(L. 206) Gr अबोधाद् (for अत्यन्त) —(L 207) Gr अनित्यत्वान् (for अनित्याच्च) —(L 210) Gr अव्यक्ताच्च (for अद्वैधात्तु) Gr ह्यव्यैकग्राहधर्मिणा (for the post half) —Colophon *Adhy. name* Ms सयमनपृच्छा

(L 212) Gr एवायमन्यो व्यक्तधर्मी (for अन्योऽव्यक्तधर्मिणो) —(L 213) Gr [ऽ]क्षेत्र (for क्षेत्रज्ञ) After क्षेत्रधर्मिणो, Gr ins विमुक्तश्चाविमुक्तश्चेति। अशुचिन प्रशुचि —(L 214) Gr विमुक्तिश्चाविमुक्ताच्च (for विमुक्तश्चाविमुक्ताद्) Gr चाशुद्धाद्वियोगश्च (for ऽशुद्धाद्योगश्च) —(L 216) Gr मत्स्योदकयो विन्मूपिकयोश्च (sic) (for °दकयोश्च) —(L 218-219) Gr चेतनेनाचेतनस्य केवलेनाकेवलस्य नित्येनानित्यस्य ज्ञानेनाज्ञानस्य —(L 220-221) Ms शोकाशोक मोहामोह स्थिरास्थिर —(L. 222) Gr अपदिश्यते (for उप°) —(L 224) Gr अनुपदेशत (for अनुपश्यत) Gr अविभक्तमविभाजनम् (for अव्यक्तमविजनम्) Gr अनुपदिश्यतो (for अनुपश्यतो) —(L 225) Gr क्षेम्य स्यादक्षेम्य (for क्षेम्यादक्षेम्यं) Gr om. (hapl) दक्षेम्या —(L. 228) Gr नैवाभि (for नैवानु) —(L 234) Gr न च लोकाद्बलत्व (for न चलो नाचलस्त्वम्) —(L. 236) Gr स साव्यक्त (for स स्याद्व्यक्त). —(L 238) Gr प्रभाव (for

निर्द्वंद्वस्य द्वद्वभावात्मकस्य
भावाद्ध स्याद्ध प्रभाव शुचि स्यात् ।
शुचिप्रबोधाद्‍शुचिस्त्व तदा स्या-
त्रिलोकसद्भावगुणप्रवर्तकम् । [ 240 ]
भवत्यय केवल एव केवल
समेत्य नित्याममलामल शुचिम् ।

शुचिप्रबोधनस्य भो सयमन बुध्यमानस्य पञ्चविंशस्य बुद्धात्पड्विंशबोधनत्वमुपदिशन्ति । योद्धार बुध्यमानस्य व्यतिरिक्तस्य व्यतिरिक्तत्वमुपपद्यते । केवल नाहमस्या [ 245 ] कश्चिन्नेय मम काचन पड्विंशस्याहमनेन मम सह चैकत्वमिति । तत्र श्लोक ।

मान्य सान्य शुचि दृष्ट्वा शुचिमाहुर्मनीपिण ।
यहि कृत्वा तमिस्त्रालमव्यक्ताचेतन परम् ।

इति । [ 250 ]

तदेतद्भगवता बुद्धमवाप्य महत्तत्त्व परमर्पिणा परमगुरुणा मम कपिलेन गुरुणा च ममासुरिणा जातिगतैर्बहुभिरवास कृत्स्नक्षय कपिलात् । ममाप्येवमेव शिष्यदर्शकत्वमुपगम्य जातिगतैर्बहुभिरवास भगवन आसुरे सकाशात् । मत्तश्च कात्यायनेनाप्तम् । गौतमेन कात्यायनादवाप्तम् । गौतमाच्च [ 255 ] गार्ग्येणावाप्तम् । तदेतत्परपरया बहुभिराचार्यैरवाप्त कृत्स्नक्षयममृतार्थतत्त्व विमलममलज्ञानम् । अलगाधमचेतममचेवलमव्यक्तमपास्य नित्य चेतन केवल ज्ञान प्रतिबुद्ध बुध्यमानेन पञ्चविंशकेन पड्विंशकम् । अत्र श्लोका भवन्ति ।

सुतस्यैतद्वर्णित मन्नियोगा- [ 260 ]
द्वाराणस्या क्रीडमानेन राज्ञा ।
तत्त्वज्ञान पृच्छत प्राञ्जलि स्या-
त्पृच्छतस्तस्य ग्रन्यतश्चार्थतश्च ।
प्रोक्त ह्येतत्पोडशप्रश्नमुग्र
निस्तत्त्वास्य विंशत्पट्चैव राजन् । [ 265 ]
य वै बुद्ध्वा बालकाय प्रणम्य
मूर्ध्नाभ्यर्ण पादयोर्हृष्यमाण ।
पद्भ्या गतस्तत्त्वमवाप्य कृत्स्न
सनत्कुमारादमृत पर वै ।
सनत्कुमारेण ममोपदिष्ट- [ 270 ]
मेतन्महद्ब्रह्म यथावदद्य ।
तत्ते श्रुत तद्भव वीतशोक
एत महाप्रश्नमवाप्य चार्थम् ।
तुल्य भवान्पश्यतु ब्रह्मणश्रे-
ष्ठिन्द्रस्य स्थाणोर्मशकस्य चैव । [ 275 ]
पतगकीटे शुनि च श्वपाके
सर्व हि सर्वत्र नरेन्द्रसिंह ।
यस्त्वन्यथा पश्यति ह्यल्पबुद्धि-
रव्यक्तनिष्ठ स भवेत राजन् ।
सत्त्वस्य सर्वस्य ह्यपश्यमानो [ 280 ]
अबुद्धिमान्दु खमुपैति नित्यम ।
न चास्य दु ख स तु दु खमेति
वैषम्यबुद्धित्वमवाप्य मोहात् ।
तद्गच्छ राजन्स्वपुरीं विशाला
वाराणसीमश्वरथेन शीघ्रम् । [ 285 ]
एतावदेतत्परम रहस्य-
मुक्त मया तेऽतिविधाय सर्वम् ।
ज्ञानी भवाद्य त्वमबुद्धबुद्धि-
र्युद्धिर्हि ते ज्यायसी राजसिंह ।
युद्ध त्वयाद्य परम पवित्र [ 290 ]
पाड्विशक पञ्चविंशात्पर यत् ।
न पञ्चविंशकात्पुन प्रजायते नरोत्तम
स यत्र तत्र सवसस्त्रिवर्गविच्छुचिर्भवेत् ।

---

°व°) —(L 242) G₇ अमलामय शुचि (for °मल शुचिम्) —(L 243) G₇ प्रबोधादस्य (for -प्रबोधनस्य) G₇ -विंशकस्य (for विंशस्य) —(L 246) G₇ [अ]हमह चास्या नेन (for [अ]हमनेन) —(L 249) G₇ अव्यक्ताचेतन (for °चेतन) —(L 251) G₇ बधम् (for बुद्धम्) G₇ अह (for महत्) —(L 253) G₇ कृत्स्न (for कृत्स्नक्षय) G₇ मया (for मम) G₇ शिष्यदर्शत्वम् (for °दर्शकत्वम्) —(L 257) G₇ अवलागाधमचेतनम् (for अलगाधमचेतनम्) —(L 258) G₇ अचेतनमज्ञानप्रतिबुद्धमव्यक्त (for नित्य चेतन केवल ज्ञान प्रतिबुद्ध). —(L 260) G₇ तस्यैवैतद्वर्णितमात्मयोगाद् —(L 261) G₇ राज्ञ (for राज्ञा) —(L 262) G₇ प्राजले (for °लि) —(L 263) G₇ पृच्छा तस्य (for पृच्छतस्तस्य) —(L 265) G₇ निस्तत्त्वा पड्विंशकश्चैव राजन् —(L 267) G₇ मूर्धापन्न (for मूर्ध्नाभ्यर्ण) G₇ दृश्यमान (for हृष्यमाण) —(L 269) G₇ परोत्म (for पर वै) —(L 272) G₇ transp तत् and ते —(L 273) G₇ एनन् (for एत) —(L 280) G₇ अपश्यमाने (for ह्यपश्यमानो) —(L 283) G₇ अपश्यमान (for अवाप्य मोहात्) —(L 287) G₇ यतते नरोत्तम (for ऽतिविधाय सर्वम्) — G₇ om lines 288–292 —(L 293) G₇ om भवेत —(L 295) G₇ अवबुध्यते (for °बुध्यति) — Colophon *Adhy name* M₆ सयमनपृच्छा समाप्ता

शुचिर्हि पञ्चविंशकस्तथैव षड्विंशक-
स्त्वमवबुध्यति यदा तदा शुचिर्भवेदिति । [ 295 ]

Colophon

[ 29 E

G1 Ms cont

वैशंपायन उवाच ।

पुरा युधिष्ठिरो राजा प्रयतेनान्तरात्मना ।
द्वैपायनमृषिश्रेष्ठ पप्रच्छाथ कृताञ्जलि ।
सहितो भ्रातृभि सर्वैरुदारमतिभि शुभै ।
पृथिव्यामुपविष्टैस्तु विनीतैरुत्तमौजसै ।
भगवान्सर्वभूतानां सर्वज्ञ सर्वदर्शिवान् । [ 5 ]
विश्रुतस्त्रिषु लोकेषु धर्मेण च दमेन च ।
तदिच्छाम उपश्रोतुं मङ्गल्यमृषिसत्तम ।
कथा भगवता प्रोक्तां सर्वपापप्रणाशिनीम् ।
वय च यद्यनुग्राह्या सर्वे भगवतो मता ।
ब्रूहि सत्यवता श्रेष्ठ शृणुमोपहिता वयम् । [ 10 ]
एवं सप्रश्रयादुक्त सत्यात्मा सत्यवादिना ।
युधिष्ठिरेण सत्कृत्य कृष्णद्वैपायनोऽब्रवीत् ।
युधिष्ठिर महाप्राज्ञ कुरूणा वंशवर्धन ।
श्रोतुमिच्छसि कौन्तेय भ्रातृभि सहित शुभाम् ।
इमां कथामुपश्रुत्य नराणामर्थसिद्धये । [ 15 ]
विजयश्च नरेन्द्राणामिह पार्थ न दुर्लभ ।
शान्तिकी पौष्टिकी रक्षा सर्वदु स्वप्ननाशिनी ।
कथेयममराकारा दैवतैरपि कथ्यते ।
अत्र ते वर्तयिष्यामि इतिहास पुरातनम् ।
बाल्येऽवास तु यद्वीर अगस्त्येन महात्मना । [ 20 ]
पुरा कृतयुगे राजन्महर्षि कुम्भसभव ।
मित्रावरुणयो पुत्र श्रीमानतितपा प्रभु ।
स चाश्रमपदे पुण्ये पुण्यकर्मा महातपा ।
समा द्वादशको राजन्वयसा भरतर्षभ ।
स्व आवसथ एकाकी ह्यभ्राकाशकृतव्रत । [ 25 ]
मित्रावरुणयो स्वर्गं गतयो सुकृतात्मनो ।
पुष्करस्योत्तरे तीरे सर्वदेवनमस्कृत ।
पर्वतो भास्करो नाम भास्कराभ स्वतेजसा ।
अत्र प्रभवते राजन्पुण्यस्रोता महानदी ।
वरदा वितमा नाम सिद्धचारणसेविता । [ 30 ]
तस्मिन्गिरिवरे तस्यास्ते पैतृक आश्रम ।
पुण्यपुष्पफलोपेतै पादपैरुपशोभितः ।
तप्यते शिशुरेकाकी तपो द्वादशवार्षिकम् ।
यत्र तत्र पुरा वत्स दिव्यैरन्यैस्तपोधनै ।
नेश्वरेण न चेन्द्रेण यमेन वरुणेन वा । [ 35 ]
नित्योर्ध्वबाहुरादित्य भास्करे तस्थिवान्मुनि ।
ऊर्ध्वमुखो निरालम्बो जितात्मा पवनोपम ।
निरावृतो निरालम्बो नियतात्मा जितेन्द्रिय ।
निर्द्वंद्वो निरहकारो निराशो नि स्पृह क्वचित् ।
काष्ठभूतस्तपस्तेपे सर्वभूतहिते रत । [ 40 ]
निर्वृतो निस्तमा धीरो निवृत्त सर्वत सम ।
तमेवमुपसपन्नमुदारमनस शुचिम् ।
भास्करे वर्तते नित्य तप्यमानमतीव च ।
अवर्धत महापुण्ये स हि धर्मेण भारत ।
अथ कौन्तेय कालेन केनचिद्भरतर्षभ । [ 45 ]
अष्टाशीतिसहस्राणि यतीना पुण्यकर्मणाम् ।
आनुपूर्व्येण यातानि महीं कृत्वा प्रदक्षिणम् ।
सपर्वतवनोद्देशा सनदीनदसागराम् ।
तत्र तत्र महापुण्या पुण्यतीर्थाभिलाषिण ।

Colophon

द्वैपायन उवाच ।

एतस्मिन्नन्तरे पार्थ ऋषिसघ स वै महान् । [ 50 ]
प्रदक्षिण महीं कृत्वा भास्कर गिरिमभ्ययात् ।
ते त गिरिवर पुण्यमथ कृत्वा प्रदक्षिणम् ।
ततो गिरिनदीं पुण्या तीर्थहेतोरुपागमन् ।
अष्टाशीतिसहस्राणि तत्र नद्या युधिष्ठिर ।
विगाह्य तज्जल राजन्प्रहृष्टा मुनयोऽभवन् । [ 55 ]
केचित्सस्नुर्यथाकाम केचिदत्र उपस्पृशन् ।
केचित्पुण्येन तोयेन पितॄन्देवानतर्पयन् ।

(L 2) G1 [अ]थि (for [अ]थ) —Before line 5, G1 ins. युधिष्ठिर ; before line 11, वैशंपायन ; before line 13, व्यास —(L 20) Ms बाल्यावास (for बाल्येऽवास). —(L 25) G1 तमावसथ (for स्व आवसथ) G1 कृत व्रत (for कृतव्रत) —(L 32) G1 अभिसंवृत (for उपशोभित) —(L 36) G1 आदित्ये (for °त्य) —(L 37) G1 ऊर्ध्वोन्मुखो (for ऊर्ध्वमुखो) Ms नियतात्मा जितेंद्रिय (for the post half). —(L 41) G1 निस्तमो (for °मा). —(L 47) G1 धर्मेण (for यातानि) —Colophon *Adhy name* Ms अगस्त्यवर्धमान
(L 56) G1 उपाविशन् (for उपस्पृ°) —(L 57) G1 पितृदेवांश्च तर्पयन् (for the post. half) —(L.

केचित्प्रक्रीडितास्तत्र जपन्त्यन्ये तपोधना ।
अध्यात्म चिन्तयन्त्यन्ये केचिद्वेदानधीयिरे ।
कथा शुश्रुवुरन्ये च प्रोक्ता अन्यैस्तपोधनै ।[60]
ध्यानमन्ये ह्युपासन्त निषेदुश्च तथा परे ।
एव तैर्ऋषिभि सिद्धैर्वितमा पुण्यवर्धनी ।
नदी सा पुरुषव्याघ्र द्योतते तैस्तपोधनै ।
एतस्मिन्नन्तरे पार्थ देवराज पुरदर ।
पितामह पुरस्कृत्य सह देवै समेयिवान् ।[65]
वितमाया तदेकान्ते तस्या नद्यां युधिष्ठिर ।
अथाब्रवीत्पुष्करज सुरेश्वरमरिंदमम् ।
विज्ञाय मुनिसघस्य धर्मे रागमुपस्थितम् ।
पुरदर महाबाहो सर्वथा श्रोतुमर्हसि ।
ऋषीणाममरश्रेष्ठ धर्मे रागमुपस्थितम् ।[70]
इमं मुहूर्तमेतेषामहकार सुरेश्वर ।
प्रभविष्यति सर्वेषामस्वर्गीयो न सशय ।
स भवान्देशमुत्सृज्य इम सुरवरेश्वर ।
गन्तुमर्हसि धर्मात्मन्द्रष्टुमेतच्च ते क्षमम् ।
स ततस्तद्वच श्रुत्वा देवराज पितामहात् ।[75]
जगाम भरतश्रेष्ठ सह देवैररिंदम ।
गते देवेश्वरे शक्रे पितामहपुरोगमे ।
अष्टाशीतिसहस्राणि परम हर्षमभ्ययु ।
ते प्रनृत्ता प्रगीताश्च तथा प्रहसिता अपि ।
वितमाया जले पुण्ये तस्मिन्प्रक्रीडिता परे ।[80]
एकान्ते च महाप्राज्ञो नारद कलहप्रिय ।
तन्त्रीयुक्तकमादाय मुनिर्वेदानधीतवान् ।
सवर्तोऽप्यय कौन्तेय जलादुत्थाय भारत ।
उवाच तानृषीन्सर्वान्हर्षेण महता युत ।
श्रूयतामृषिभि सर्वैरिद मम वचो द्विजा ।[85]
रोचते यदि सर्वेषा क्रियता मुनिसत्तमा ।
अहमुग्रतपा विप्रा भवन्तोऽपि तथैव च ।
न तुल्योऽस्सत्प्रभावेण धर्मेण च तथा पर ।
दीर्घकालप्रचीर्णस्य यमस्य नियमस्य च ।
तपोबल न पश्यामि किमप्येतत्कथंचन ।[90]
सवर्तवचन श्रुत्वा सर्वं तदृषिमण्डलम् ।
अहंकारवश प्राप्त तद्वाक्यमभिनन्दति ।
अहंकृत्वा तत सर्वे ऋषय कुन्तिनन्दन ।
परस्परमवज्ञाय तत्र तेऽथामितौजस ।
भृगुस्ततो महाराज सर्वर्षिगणपूजित ।[95]
सवर्तवचन तत्र स सत्कृत्येदमब्रवीत् ।
एवमेतन्न सदेहो यत्त्वयोक्त धृतव्रत ।
तस्मात्प्रभाव तपसो द्रष्टुमर्हाम सर्वश ।
ऋषय श्रूयता तावन्मम वाक्य धृतव्रता ।
अह सुचिरह श्रेष्ठ अहमुग्रतपोधन ।[100]
अह प्रधान इत्येव यज्जल्पथ तपोधना ।
किमेतत्कथयित्वा वो ह्यहकारात्पुन पुन ।
प्रत्यक्ष द्रष्टुमिच्छाम इह धर्मस्य न फलम् ।
न तपो विद्यते यत्र सर्वभूतेष्वसशयम् ।
उपस्पृश्य ततस्तोय पुनरभ्युपगम्यताम् ।[105]
दृश्यता सुव्रतस्यस्य धर्मस्य महत फलम् ।
यत्र येन तपस्तप्त तथा दशदशात्मकम् ।
तद्दर्शयध्व सगम्य तपो यस्य यथा कृतम् ।
ततो भृगुवच श्रुत्वा सर्वं तदृषिमण्डलम् ।
भृगोर्वच पुरस्कृत्य तथेत्यूचुर्महर्षय ।[110]
ते तु क्रोधादहकार प्राप्य सर्वे महर्षय ।
नदीं ता वितमा पुण्यामुपस्पृष्टु विचक्रमु ।
ते तत्र अष्टतपसो वितमायां जल शुभम् ।
उपस्पृश्य महाराज जप्यमावर्तयस्तदा ।
ततस्तद्गगन रुद्ध सर्वैस्तैर्ऋषिसत्तमै ।[115]
तपोबल नरश्रेष्ठ दर्शयद्भिरसशयम् ।
कश्चिदाकाशमाविश्य ज्वलद्धर्मेण केवलम् ।
अप्सरोभिस्तथा चान्ये पूता स्वर्गगता द्विजा ।
पुष्पवर्षैस्तथा चान्यै पूज्यन्ते गुह्यकैरपि ।
केचिदाकाशमाविश्य दिव्यां चेष्टामकुर्वत ।[120]
तथासीत्सुमहान्नादो हर्षात्तेषामरिंदम ।
अन्योन्य पश्यता तत्र हसतां च युधिष्ठिर ।
ते दृष्ट्वा बलमन्योन्य धर्मस्य भरतर्षभ ।

59 ) G1 अधीयते ( for °यिरे ) — ( L. 62 ) G1 ते ( for तैर् ) — ( L 74 ) G1 एषां ( for एतत् ) — ( L 75 ) G1 ततस्तु ( for स ततस् ) — ( L. 82 ) G1 वेदम् ( for वेदान् ) — Before line 85, G1 ins सवर्त — ( L 88 ) G1 धर्मे न ( for धर्मेण ) — Before line 91, G1 ins व्यास — ( L 92 ) G1 अभिनदत ( for °नन्दति ) — Before line 97, G1 ins भृगु° Before line 109, G1 ins व्यास° — ( L 112 ) G1 प्रचक्रमु° ( for विच° ) — ( L 113 ) G1 च प्रनष्ट ( for तत्र अष्ट- ). — ( L 118 ) G1 चान्यैर् ( for चान्ये ) G1 वृत्ता ( for पूता ) — ( L 121 ) G1 दोषो ( for नादो ) — ( L 125 ) G1 दृष्ट्वा च ( for तु दृष्ट्वा ). — ( L 132 )

तदेवं कथयन्तस्ते तीरे नद्यास्तथा विभो ।
त तु दृष्ट्वा विदित्वा च धर्मलोपं महात्मनाम् । [ 125 ]
नारद कुरुशार्दूल षट्त्र्यस्तन्त्रियुक्तकम् ।
अथ ते ऋषय. सर्वे गन्तुकामा नभस्तलम् ।
यथापूर्वमभिप्रेप्सु अशक्ता गमनाय हि ।
अष्टाशीतिसहस्राणि मुनीनां भावितात्मनाम् ।
अशक्ता गमने राजस्ततोऽन्योन्यमपश्यत । [ 130 ]
ते निरस्ता निरुत्साहा निराशा गमन प्रति ।
तत्रैवासन्महाभाग भ्रष्टपक्षा खगा इव ।
परस्परमुदैक्षन्त एवमुक्त्वा महर्षय ।
किमिद किं न्विदमिति धिक्कष्टमिति चापरे ।
ते वीक्षमाणा कृपणा स्वर्गे विगतचेतस । [ 135 ]
अहंकारेण महता वसुधायां निपातिता ।
मोहस्य वशमागम्य सर्व एव विचेतस ।
न किंचिदभिजानन्ति धर्मस्य गमनस्य वा ।
यदा विमनस सर्वे खगा खात्पतिता इव ।
अथैतान्नारदोवाच हर्षादिदमथो वच । [ 140 ]
किमुदीक्षथ मोहस्था नाकपृष्ठ यियासव ।
दुर्लभोऽय गुणो भूयो भवतां नष्टधर्मिणाम् ।
अहकारेण महता नष्टो धर्म सनातन ।
एवं गते न पश्यामि स्वर्गं गन्तु यथा पुरा ।
एते स्थ ऋषय सर्वे पक्षहीना खगा इव । [ 145 ]
तेन धर्मातिलोपेन चिन्तितेन दुरात्मना ।
एते स्थ सर्वे सवृत्ता निराशा गमन प्रति ।
नद्यास्तीरे शुभे पुण्ये धर्मं कुरुत यत्नत ।

Colophon

द्वैपायन उवाच ।

तस्य तद्वचन श्रुत्वा ऋषयो दीनचेतस ।
त नारदमृषिश्रेष्ठ प्रह्वा भूत्वाथ तेऽब्रुवन् । [ 150 ]
पुनरस्मद्विधैर्भूयो नाकपृष्ठ तपोधन ।
अधिष्ठातु कथ चापि न भवेद्धर्मसकर. ।
तेषां तु वचनं श्रुत्वा नारद· पुनरब्रवीत् ।
मुहूर्तं ध्यानमास्थाय योगमागम्य वै शुभम् ।
अहंकारस्य जानीध्वमृषयो दारुण बलम् । [ 155 ]
किमाशास्य तु पापस्य कर्मणश्चरितस्य वै ।
अहो फलमनार्यस्य दुष्कृतस्य महत्त्विदम् ।
यदेव प्राप्यते दोषस्त्वहकारो महर्षिभि ।
क तद्वर्षसहस्राणि तप्तस्य तपस फलम् ।
क तपष्ट पुरा स्विष्ट नियम क च वै दम । [ 160 ]
यदूर्ध्वबाहुभि शान्तै क नु तस्य फल गतम् ।
यदर्थं चार्चिता देवा पितरश्च तपोधना ।
क नु तस्य फल विप्रा तपसोऽव्ययस्य वै गतम् ।
एते कर्तव्यधर्मा स्थ पुनरेव यथा पुरा ।
एव गते न पश्यामि गमन वस्त्रिविष्टपम् । [ 165 ]
अहकारप्रभावेण तेन सशयिता गति ।
अहमप्यनुगन्ता वै केवलेन तु कर्मणा ।
अनेन कारणेनासमेव सशयमात्मनि ।
तथिय प्रवरस्रोता नदी पुण्यजला शुभा ।
कर्तव्यो धर्म इह तु यदि नास्ति नभोगति । [ 170 ]
वायुभक्षा निराहारा नियता विजितेन्द्रिया ।
इह धर्मं सुनिभृता भवन्त कर्तुमर्हथ ।
इह देवेश्वरेणापि वासवेन महात्मना ।
धर्म उग्र सुचरितो वितमाया पुरोपरि ।
इह देवेन देव्या च रुद्रेण सुमहत्तप । [ 175 ]
तप्त वर्षसहस्राणि दिव्येन विधिना पुरा ।
इमा सरिद्वरा प्राप्य विष्णुनापि महात्मना ।
शुभ जलमुपस्पृश्य प्राप्तो दुस्तरसक्षय ।
एष प्रभावो धर्मज्ञा नद्या अस्या न सशय. ।
चरित्वेह तत पुण्य गमिष्यथ शुभा गतिम् । [ 180 ]
यदा विमनस सर्वे परं दैन्यमुपागता ।
सर्व एव महात्मान ततस्तान्नारदोऽब्रवीत् ।
दैन्यमेतत्परित्यज्य सर्वकार्यावसादकम् ।
श्रोतुमर्हथ वै सर्वे प्रयतेनान्तरात्मना ।

---

G1 महाभागा ( for °भाग ). — G1 om line 133 — (L. 135 ) G1 एवमुक्त्वा मीक्षमाणा. ( for the prior half ). — (L 138 ) G1 गमनाय ( for °नस्य ) — Before line 141, G1 ins नारद . — (L 141 ) G1 उद्वीक्षथ ( for उदी° ) M5 इयासव ( for यि° ) — Colophon *Adhy name* M5 अगस्त्यसर्भमान

(L. 149 ) G1 दिव्य ( for दीन ). — Before line 151, G1 ins. ऋषय·. Before line 153, G1 ins. व्यास and before 154, नारद . — (L 158 ) G1 अहकारो ( for स्त्वह° ) — (L 159 ) G1 किं ( for क ) — (L 160 ) G1 कृत नष्टं ( for क तप्तष्ट ) — (L 163 ) G1 तपसोत्र तु वै गत ( for the post half ). — (L 167 ) G1 केवल न ( for केवलेन ) — (L. 168 ) G1 अहम् ( for आसम् ) — Before line 181, G1 ins. व्यास. . — (L. 182 ) G1 सर्वानेव

यच्च वक्ष्यामि तत्कार्यं भवद्भि कार्यसाधनम् । [ 185 ]
सर्वथा मानमुत्सृज्य विनयेन दमेन च ।
यदिद वचन मेऽद्य करिष्यथ तपोधना ।
इद मुहूर्तमाकाश यथापूर्व गमिष्यथ ।
यदि मद्वचन सर्वे यथोक्तमनुतिष्ठथ ।
अस्मिन्मुहूर्ते सर्वेषा कल्मष नाशमेष्यति । [ 190 ]
अनृत नोक्तपूर्वं मे मुनिरस्मि धृतव्रता ।
मद्वच श्रूयता साधु नारदोऽस्मि तपोधना ।
धर्मो वस्त्यक्तमानाना स्वर्गश्चैव भविष्यति ।
इद मुहूर्त सर्वेषा मद्वाक्य परिगृह्य तु ।
भावज्ञेयानि धर्म्याणि वाक्यानि सुहृदा सदा । [ 195 ]
क्रियतामविचारेण समेद वचन हितम् ।
भवतस्य हितार्थाय यथावदिह लप्स्यथ ।
कथयिष्यामि व सम्यक्सर्वेषामेव साधुषु ।
श्रुत्वा क्षमाक्षम ज्ञात्वा यदित तत्करिष्यथ ।
शाश्वत च ध्रुव चैव यथास्थान गमिष्यथ । [ 200 ]

Colophon

द्वैपायन उवाच ।

ते तस्य वचन श्रुत्वा तदा ऋषिवरा नृप ।
हर्षेणोत्फुल्लनयना सर्व एव तदाभवन् ।
त भृगु प्रयतो भूत्वा देवर्षि नारद तदा ।
उवाच पुरुषश्रेष्ठ विस्मयाद्रुचिर वच ।
किं नु तद्दैवत ब्रह्मन्व्रत वा नियमोऽपि वा । [ 205 ]
यत्कृत्वा खेचरश्रेष्ठ नाकपृष्ठ लभेमहि ।
सर्वथा नैतदाश्चर्यं देवर्षे तव यन्मतम् ।
अस्माकमनुकम्पार्थं यत्त्व वदसि धार्मिक ।
ततो वद हित वाक्य पापमेतत्प्रमार्जितम् ।
को वा स नियमो विप्र समाधेयो हि न पुन । [ 210 ]
तदेते वै वय सर्वे ऋषयो मुनिसत्तम ।
बद्धाञ्जलिपुटा ब्रह्मास्तव साधो प्रसादने ।
स तु धर्मात्मन श्रुत्वा भृगोर्वाक्य महायशा ।
कृताञ्जलिपुटांस्तांश्च ऋषीन्दृष्ट्वा महामुनि ।
तत प्रहस्य तद्वाक्य नारदो मुनिसत्तम । [ 215 ]
सर्वानेव समासीनानिद वचनमब्रवीत् ।
हन्त व कथयिष्यामि सर्व एव निबोधत ।
क्षम चाप्यनुकूल च स्वर्गाय च हिताय च ।
एष शैलवरे बालो मित्रावरुणसभव ।
अगस्त्यो नाम धर्मात्मा भास्करे तप आस्थित । [220]
धैर्येण तपसा चैव धर्मेण च दमेन च ।
न तुल्यो विद्यते यस्य सर्वेषा भवतामपि ।
त बालमुग्रतपस धर्मात्मानमनिन्दितम् ।
अभिगच्छत सहत्य ऋषयो मानमात्मन ।
यदि मान च मोह च त्यक्त्वा दर्प च केवलम् । [ 225 ]
अभिगच्छत त बाल गमिष्यथ यथा पुरा ।
स ह्यर्क इव तेजस्वी भास्करे पर्वतोत्तमे ।
तपश्चरति लोकस्य स्वस्तिहेतोर्धृतव्रत ।
न तुल्यस्तेजसा तस्य धर्मेण च दमेन च ।
उपतिष्ठत त सर्वे वरद मुनिपुगवम् । [ 230 ]
ततस्तस्य वच श्रुत्वा नारदस्य महात्मन ।
हृष्टेन मनसा सर्वे तस्य वाक्यमधिष्ठिता ।
नारद ते तथेत्युक्त्वा सर्वे कृत्वा प्रदक्षिणम् ।
प्रसन्नमनसो वीर जग्मुस्ते भास्कर गिरिम् ।
ते त गिरिवर पुण्य सर्वकालफलद्रुमम् । [ 235 ]
अधिरुह्य यतात्मान सर्वत प्रत्यलोकयन् ।
स तु पर्वतराजस्य भास्करस्याशुमानिव ।
उपर्युपरि धर्मात्मा चरत्युग्र तप शुचि ।
त दृष्ट्वा विस्मिता सर्वे ऋषय शत्रुसूदन ।
तस्मान्नातर्कयस्ते तद्यदुक्त नारदेन वै । [ 240 ]
ततस्त्वभिगता सर्वे त बालमृषिसत्तमा ।
अष्टाशीतिसहस्राणि प्रयतानि यतानि च ।
सर्वेषा वचनात्तेषा भृगुस्तत्र यतव्रत ।
अब्रवीत्त महात्मान दीप्यमान स्वतेजसा ।
अगस्त्य श्रेष्ठ साधूना नित्य सुचरितव्रत । [ 245 ]

(for सर्व एव) — Before line 183, G1 ins नारद° —(L. 184) G1 ते (for वै) —(L 192) G1 तद्वच (for मद्वच) G1 धृतव्रता° (for तपोधना°) —(L 195) G1 भावश्रेयांसि (for °ज्ञेयानि). — Colophon. *Adhy name* M1 अगस्त्यवर्धमान

Before line 205, G1 ins भृगु. —(L 205) G1 ब्रह्म (for ब्रह्मन्) —(L. 206) G1 च मुनिश्रेष्ठ (for खेचर°). —(L 207) G1 सर्वदा (for °था) —(L 212) G1 तपसा यो प्रसादने (sic) (for the post half). —Before line 213, G1 ins व्यास Before line 217, G1 ins नारद —(L 218) M1 क्षय (for क्षम) —(L 224) G1 सत्यज्य (for सहत्य) —(L 228) G1 धृत वच (for धृतव्रत°) — Before line 231, G1 ins व्यास° —(L 241) G1 त्वभिगता (for त्वभि°) —(L 244) G1 दीप्यमान (for

तदेव कथयन्तस्ते तीरे नद्यास्तथा विभो ।
व तु दृष्ट्वा विदित्वा च धर्मलोप महात्मनाम् । [125]
नारद कुरुशार्दूल षट्ट्यस्त्रिन्त्रियुक्तकम् ।
अथ ते ऋषय सर्वे गन्तुकामा नभस्तलम् ।
यथापूर्वसमित्रन्न अशक्ता गमनाय हि ।
अष्टाशीतिसहस्राणि मुनीना भावितात्मनाम् ।
अशक्ता गमने राजस्ततोऽन्योन्यमपश्यत । [130]
ते निरस्ता निरुत्साहा निराशा गमन प्रति ।
तत्रैवासन्महाभाग भ्रष्टपक्षा खगा इव ।
परस्परमुदैक्षन्त एवमुक्त्वा महर्षय ।
किमिद किं न्विदमिति धिक्कष्टमिति चापरे ।
ते वीक्षमाणा कृपणा स्वर्गे विगतचेतस । [135]
अहकारेण महता वसुधाया निपातिता ।
मोहस्य वशमागम्य सर्व एव विचेतस ।
न किंचिदभिजानन्ति धर्मस्य गमनस्य वा ।
यदा विमनस सर्वे खगा खात्पतिता इव ।
अथैतान्नारदोवाच हर्षादिदमथो वच । [140]
किमुदीक्षय मोहस्था नाकपृष्ठ यियासव ।
दुर्लभोऽयं गुणो भूयो भवता नष्टधर्मिणाम् ।
अहकारेण महता नष्टो धर्म सनातन ।
एवं गते न पश्यामि स्वर्गं गन्तु यथा पुरा ।
एते स्थ ऋषय सर्वे पक्षहीना खगा इव । [145]
तेन धर्मातिलोपेन चिन्तितेन दुरात्मना ।
एते स्थ सर्वे सवृत्ता निराशा गमन प्रति ।
नद्यास्तीरे शुभे पुण्ये धर्मं कुरुत यत्नत ।

Colophon

द्वैपायन उवाच ।

तस्य तद्वचन श्रुत्वा ऋषयो दीनचेतस ।
त नारदमृषिश्रेष्ठ प्रह्वा भूत्वाथ तेऽब्रुवन् । [150]
पुनरस्मद्विधैर्भूयो नाकपृष्ठ तपोधन ।
अधिष्ठातु कथं वापि न भवेद्धर्मसकर ।
तेषां तु वचनं श्रुत्वा नारद पुनरब्रवीत् ।
मुहूर्तं ध्यानमास्थाय योगमागम्य वै शुभम् ।
अहकारस्य जानीध्वमृषयो दारुण बलम् । [155]
किमाशास्य तु पापस्य कर्मणश्चरितस्य वै ।
अहो फलमनार्यस्य दुष्कृतस्य महत्त्विदम् ।
यदेव प्राप्यते दोषस्त्वहकारो महर्षिभि ।
क तद्वर्षसहस्राणि तप्तस्य तपस फलम् ।
क तन्नष्ट पुरा त्विष्टं नियम क च वै दम । [160]
यदूर्ध्वबाहुभि शान्तै क नु तस्य फलं गतम् ।
यदर्थं चार्चिता देवा. पितरश्च तपोधना ।
क नु तस्य फल विप्रा तपसोऽप्यस्य वै गतम् ।
एते कर्तव्यधर्मा स्थ पुनरेव यथा पुरा ।
एव गते न पश्यामि गमन वस्त्रिविष्टपम् । [165]
अहकारप्रभावेण तेन सशयिता गति ।
अहमप्यनुगन्ता वै केवलेन तु कर्मणा ।
अनेन कारणेनाहमेव सशयमात्मनि ।
तदियं प्रवरस्रोता नदी पुण्यजला शुभा ।
कर्तव्यो धर्म इह तु यदि नास्ति नभोगति । [170]
वायुभक्षा निराहारा नियता विजितेन्द्रिया ।
इह धर्मं सुनिभृता भवन्त कर्तुमर्हथ ।
इह देवेश्वरेणापि वासवेन महात्मना ।
धर्म उग्र सुचरितो वितमाया पुरोपरि ।
इह देवेन देव्या च रुद्रेण सुमहत्तप । [175]
तप्त वर्षसहस्राणि दिव्येन विधिना पुरा ।
इमां सरिद्वरा प्राप्य विष्णुनापि महात्मना ।
शुभ जलमुपस्पृश्य प्राप्तो दुस्तरसक्षय ।
एष प्रभावो धर्मज्ञा नद्या अस्या न सशय ।
चरित्वेह तत पुण्य गमिष्यथ शुभां गतिम् । [180]
यदा विमनस सर्वे पर दैन्यमुपागता ।
सर्व एव महात्मान ततस्तान्नारदोऽब्रवीत् ।
दैन्यमेतत्परित्यज्य सर्वकार्यावसादकम् ।
श्रोतुमर्हथ वै सर्वे प्रयतेनान्तरात्मना ।

---

G1 महाभागा (for °भाग) — G1 om line 133 — (L. 135) G1 एवमुक्त्वा वीक्षमाणा (for the prior half). — (L 138) G1 गमनाय (for °नस्य) — Before line 141, G1 ins नारद — (L 141) G1 उद्वीक्षथ (for उद्वी°) M3 इयासव (for यि°) — Colophon *Adhy name* M3 अगस्त्यवर्धमान

(L 149) G1 दिव्य (for दीन). — Before line 151, G1 ins. ऋषय°. Before line 153, G1 ins. व्यास and before 154, नारद° — (L 158) G1 अहकारो (for स्त्वह°) — (L 159) G1 किं (for क) — (L 160) G1 कृत नष्ट (for क तन्नष्ट) — (L 163) G1 तपसोन्न तु वै गत (for the post half). — (L 167) G1 केवल न (for केवलेन) — (L. 168) G1 अहम् (for आसम्) — Before line 181, G1 ins व्यास:. — (L. 182) G1 सर्वानेव

यच्च वक्ष्यामि तत्कार्यं भवद्भि कार्यसाधनम् । [ 185 ]
सर्वथा मानमुत्सृज्य विनयेन दमेन च ।
यदिद वचन मेऽद्य करिष्यथ तपोधना ।
इद मुहूर्तमाकाश यथापूर्वं गमिष्यथ ।
यदि मद्वचन सर्वे यथोक्तमनुतिष्ठथ ।
अस्मिन्मुहूर्ते सर्वेषा कल्मष नाशमेष्यति । [ 190 ]
अनृत नोक्तपूर्वं मे मुनिरस्मि धृतव्रता ।
मद्वच श्रूयता साधु नारदोऽस्मि तपोधना ।
धर्मो वस्त्यक्तमानाना स्वर्गश्चैव भविष्यति ।
इद मुहूर्तं सर्वेषा मद्वाक्य परिगृह्य तु ।
भावज्ञेयानि धर्म्याणि वाक्यानि सुहृदा सदा । [ 195 ]
क्रियतामविचारेण ममेद वचन हितम् ।
सवर्तस्य हितार्थाय यथावदिह लप्स्यथ ।
कथयिष्यामि व सम्यक्सर्वेषामेव साधुषु ।
श्रुत्वा क्षमाक्षम ज्ञात्वा यद्धित तत्करिष्यथ ।
शाश्वत च ध्रुव चैव यथास्थान गमिष्यथ । [ 200 ]

*Colophon*

द्वैपायन उवाच ।

ते तस्य वचन श्रुत्वा तदा ऋषिवरा नृप ।
हर्षेणोत्फुल्लनयना सर्व एव तदाभवन् ।
त भृगु प्रयतो भूत्वा देवर्षि नारद तदा ।
उवाच पुरुषश्रेष्ठ विस्मयाद्रुचिर वच ।
किं नु तद्दैवत ब्रह्मन्व्रत वा नियमोऽपि वा । [ 205 ]
यत्कृत्वा खेचरश्रेष्ठ नाकपृष्ठ लभेमहि ।
सर्वथा नैतदाश्चर्यं देवर्षे तव यन्मतम् ।
अस्माकमनुकम्पार्थं यत्त्व वदसि धार्मिक ।
ततो वद हित वाक्य पापमेतत्प्रमार्जितम् ।
को वा स नियमो विप्र समाधेयो हि न पुन । [ 210 ]
तदेते वै वय सर्वे ऋषयो मुनिसत्तम ।
बद्धाञ्जलिपुटा प्रह्वास्तव साधो प्रसादने ।
तत्तु धर्मात्मन श्रुत्वा भृगोर्वाक्य महायशा ।
कृताञ्जलिपुटास्तांश्च ऋषीन्दृष्ट्वा महामुनि ।
तत प्रहस्य तद्वाक्य नारदो मुनिसत्तम । [ 215 ]
सर्वानेव समासीनानिद वचनमब्रवीत् ।
हन्त व कथयिष्यामि सर्व एव निबोधत ।
क्षम चाप्यनुकूल च स्वर्गाय च हिताय च ।
एष शैलवरे बालो मित्रावरुणसभव ।
अगस्त्यो नाम धर्मात्मा भास्करे तप आस्थित । [220]
धैर्येण तपसा चैव धर्मेण च दमेन च ।
न तुल्यो विद्यते यस्य सर्वेषा भवतामपि ।
त बालमुग्रतपस धर्मात्मानमनिन्दितम् ।
अभिगच्छत सहृत्य ऋषयो मानमात्मन ।
यदि मान च मोह च त्यक्त्वा दर्प च केवलम् । [ 225 ]
अभिगच्छत त बाल गमिष्यथ यथा पुरा ।
स ह्यर्क इव तेजस्वी भास्करे पर्वतोत्तमे ।
तपश्चरति लोकस्य स्वस्तिहेतोर्धृतव्रत ।
न तुल्यस्तेजसा तस्य धर्मेण च दमेन च ।
उपतिष्ठत त सर्वे वरद मुनिपुगवम् । [ 230 ]
ततस्तस्य वच श्रुत्वा नारदस्य महात्मन ।
हृष्टेन मनसा सर्वे तस्य वाक्यमधिष्ठिता ।
नारद ते तथेत्युक्त्वा सर्वे कृत्वा प्रदक्षिणम् ।
प्रसन्नमनसो वीर जग्मुस्ते भास्कर गिरिम् ।
ते त गिरिवर पुण्य सर्वकालफलद्रुमम् । [ 235 ]
अविरुह्य यतात्मान सर्वत प्रत्यलोकयन् ।
स तु पर्वतराजस्य भास्करस्याशुमानिव ।
उपर्युपरि धर्मात्मा चरत्युग्र तप शुचि ।
त दृष्ट्वा विस्मिता सर्वे ऋषय शत्रुसूदन ।
तस्मान्नातर्कयस्ते तद्यदुक्त नारदेन वै । [ 240 ]
ततस्त्वभिगता सर्वे त बालमृषिसत्तमा ।
अष्टाशीतिसहस्राणि प्रयतानि यतानि च ।
सर्वेषा वचनात्तेषा भृगुस्तत्र यतव्रत ।
अब्रवीत्त महात्मानं दीप्यमान स्वतेजसा ।
अगस्त्य श्रेष्ठ साधूना नित्य सुचरितव्रत । [ 245 ]

---

(for सर्व एव) — Before line 183, G1 ins नारद° —(L. 184) G1 ते (for वै) —(L 192) G1 तद्वच (for मद्वच°) G1 धृतव्रताः (for तपोधना°) —(L 195) G1 भावश्रेयांसि (for °ज्ञेयानि). — Colophon *Adhy name* M8 अगस्त्यवर्धमान°

Before line 205, G1 ins भृगु —(L 205) G1 ब्रह्म (for ब्रह्मन्) —(L. 206) G1 च मुनिश्रेष्ठ (for खेचर°) —(L 207) G1 सर्वदा (for °था) —(L 212) G1 तपसा यो प्रसादने (sic) (for the post half) —Before line 213, G1 ins व्यास Before line 217, G1 ins नारद —(L 218) M8 क्षय (for क्षम) —(L 224) G1 सत्यज्य (for सहृत्य) —(L 228) G1 धृत वच° (for धृतव्रत) — Before line 231, G1 ins. व्यास° —(L. 241) G1 त्वधिगता (for त्वभि°) —(L 244) G1 दीप्यमान (for

